**अन्वय**—असौ कुसुमेषुगर्भजं वियोगिनाम् अन्धङ्करणं परागं पुरा स्मरेण पुरारये मुक्तेषु शरेषु सङ्गतं तदङ्गभस्म इव अमन्यत ।

**अनुवाद**—उसने कुसुम रूपी बाण के मध्य भाग में उत्पन्न हुई, वियोगियों को अन्धा बनाने वाली पुष्पधूलि, पहले कामदेव के द्वारा शिव पर छोड़े गये बाणों में लगी उसके (शिव के) शरीर की भस्म, मानो, समझी ।

**मल्लि०**—अमन्यतेति । असौ नलः कुसुमान्येव इषवः कामबाणास्तेषां गर्भजं गर्भजातं वियोगिनाम्, (इति कर्मणि षष्ठी), अन्धाः क्रियन्तेऽनेनेत्यन्धङ्करणः, (आढ्यसुभगेत्यादिना च्व्यर्थे ख्युन् प्रत्ययः, अरुर्द्विषदित्यादिना मुमागमः), तं परागं पुरा पूर्वं पुरारये पुरहराय स्मरेण मुक्तेषु शरेषु सङ्गतं संसक्तं तस्य पुरारेरङ्गे यद्भस्म तद् इवामन्यत इति उत्प्रेक्षितवानित्यर्थः । (पुरा पुरारये ये मुक्ताः त एवैते पुरोवर्त्तिनः कुसुमेषव इत्यभिमानः, अन्यथैषां तदङ्गभस्मसङ्गोत्प्रेक्षानुत्थानादिति) ।

**टिप्पणी**- इस श्लोक में पुष्पों के पराग में शिव के शरीर पर लगी भस्म की उत्प्रेक्षा की गई है ॥८७॥

पिकाद्वने शृण्वति भृङ्गहुङ्कृतै-
र्दशामुदञ्चत्करुणां वियोगिनाम् ।
अनास्थया सूनकरप्रसारिणीं
ददर्श दूनः स्थलपद्मिनीं नलः ॥८८॥

**अन्वय**--पिकाद् भृङ्गहुङ्कृतैः वियोगिनां दशाम् उदञ्चत्करुणां वने शृण्वति अनास्थया सूनकरप्रसारिणीं स्थलपद्मिनीं नलः दूनः ददर्श ।

**अनुवाद**—कोयल से भ्रमरों की (हुङ्कारों से की गई) वियोगियों की दशा को, जिसमें करुणा उत्पन्न हो रही थी इस प्रकार वन के सुनने पर अनिच्छा से पुष्परूपी हाथ को फैलाने वाली स्थलपद्मिनी को नल ने दुःखी होकर देखा ।

**मल्लि०**—पिकादिति । वने उपवने श्रोतरि पिकाद्वक्तुः सकाशात् भृङ्गहुङ्कृतैर्वियोगिनां दशामलिहुङ्कारकृताम्, दुखावस्थामित्यर्थः, उदञ्चत्करुणां विकसद्वृक्षविशेषमुद्यत्कृपञ्च यथा तथा शृण्वति सति, ('करुणास्तु रसे वृक्षे

कृपायां करुणा मता' इति विश्वः), अनास्थया श्रोतुमनिच्छया सूनं प्रसूनमेव करं प्रसारयतीति प्रसारिणीं पुष्परूपहस्तविस्तारिणीम्, तथोक्तामनिष्टकथां करेण वारयन्तीमिव स्थितामित्यर्थः, (सूनकरेति प्रसारिणीमिति रूपकानुप्राणिता गम्योत्प्रेक्षेयम्), स्थलपद्मिनीं नलो दूनः परितप्तः सन्, (दूङः कर्त्तरि क्तः, ल्वादिभ्यश्चेति निष्ठानत्वम्) ददर्श ।

टिप्पणी—उदञ्चत्करुणम् (क्रियाविशेषण)—इसमें श्लेष है—(१) उदञ्चन्तः करुणास्तन्नामका वृक्षा यस्मिन् तत्तथा, अर्थात् जिसमें करुणा नामक वृक्ष खिल रहे थे । (२) उदञ्चती करुणा दया तस्मिन् तत्तथा, अर्थात् जिनमें दया उत्पन्न हो रही थी । इस प्रकार जब कोयल भ्रमरों की हुङ्कार से की गई वियोगियों की करुणाजनक दशा को कह रही थी तो स्थलकमलिनी उसे सुनना नहीं चाहती थी, इसलिये वह पुष्परूपी हाथ फैलाकर, मानो, कोयल को वैसा करने से रोक रही थी ॥८८॥

रसालसालः समदृश्यतामुना
स्फुरद्द्विरेफारवरोषहुङ्कृतिः ।
समीरलोलैर्मुकुलैर्वियोगिने
जनाय दित्सन्निव तर्जनाभयम् ॥८९॥

अन्वय—अमुना स्फुरद्द्विरेफारवरोषहुङ्कृतिः, रसालसालः समीरलोलैः मुकुलैः वियोगिने जनाय तर्जनाभयं दित्सन्निव अदृश्यत ।

अनुवाद—इस (नल) से आम का वृक्ष उड़ते हुए भौरों की गुञ्जार ही जिसकी क्रोध की हुङ्कार थी, वायु से चञ्चल मञ्जरियों से विरही लोगों को, मानो तर्जना का भय देने की इच्छा करता हुआ देखा गया ।

मल्लि०—रसालेति । अमुना नलेन स्फुरन्तो द्विरेफास्तेषामारवो भ्रमरझङ्कार एव रोषेण या हुङ्कृतिर्हुङ्कारो यस्य स समीरलोलैर्वायुचलैःमुकुलैः, अङ्गुलिभिरिति भावः, वियोगिने जनाय तर्जनाभयं दित्सन् दातुमिच्छन्निव स्थितः (ददातेः सन प्रत्ययः, सनि मीमेत्यादिना इसादेशः, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः सस्यार्द्धधातुक इति सकारस्य तकारः), रसालसालश्चतवृक्षः

समदृश्यत सम्यग् दृष्टः । (द्विरेफेत्यादिरूपकोत्थापितेयं तर्जनाभयजननोत्प्रेक्षेति सङ्करः) ।

टिप्पणी—दित्सन्—दा+सन्+शतृ (पुं० एकव०) ॥८९॥

दिने दिने त्वं तनुरेधि रेऽधिकं
पुनः पुनर्मूर्च्छ च मृत्युमृच्छ च ।
इतीव पान्थं शपतः पिकान् द्विजान्
सखेदमैक्षिष्ट स लोहितेक्षणान् ॥९०॥

अन्वय—'रे त्वं दिने दिने अधिकं तनुः एधि, पुनः पुनः च मूर्च्छ, मृत्युं च ऋच्छ' इति पान्थं शपत इव लोहितेक्षणान् पिकान् द्विजान् स सखेदम् ऐक्षिष्ट ।

अनुवाद—'ऐ तू दिन-दिन अधिक दुर्बल हो बार-बार मूर्छित हो और मृत्यु को प्राप्त हो' इस प्रकार पथिक को, मानो, शाप देते हुए, लाल नेत्रों वाले पिक-पक्षियों को उसने खेद के साथ देखा ।

मल्लि०—दिने दिने इति । रे, इति हीनसम्बोधने, त्वं दिने दिने अधिकं तनुः एधि अधिकं कृशो भव, (अस्तेर्लोट् सिप्, हुझल्भ्यो हेधिरिति धित्वम्, 'ध्वसोरेद्धावभ्यासलोपश्च' इति (एत्वम्) पुनः पुनः मूर्च्छ च मृत्युं मरणमृच्छ च इति पान्थं नित्यपथिकं शपतः शपमानानिव स्थितान्, (इत्युत्प्रेक्षा), लोहितेक्षणान् रक्तदृष्टीन, एकत्र स्वभावतोऽन्यत्र रोषाच्चेति द्रष्टव्यम्, पिकान् कोकिलान् द्विजान् पक्षिणो ब्राह्मणांश्च स नलः सखेदमैक्षिष्ट, स्वस्यापि उक्तशङ्कयेति भावः ।

टिप्पणी—एधि—√अस्+लोट् मध्यमपुरुष एकवचन । ऋच्छ=गच्छ । द्विजान्—(१) पक्षी. (२) ब्राह्मण । कोयल की आँखें स्वभाव से लाल होती हैं, क्रोध में भी आँखें लाल हो जाती हैं । इसलिये लाल आँखें होने के कारण कोयल में शाप देने की उत्प्रेक्षा की गई । ऐक्षिष्ट—√ईक्ष्+लुङ् ॥९०॥

अलिस्रजा कुड्मलमुच्चशेखरं
निपीय चाम्पेयमधीरया दृशा ।
स धूमकेतुं विपदे वियोगिना-
मुदीतमाशङ्कितवानशङ्कत ॥६१॥

अन्वय—अलिस्रजा उच्चशेखरं चाम्पेयं कुड्मलम् अधीरया दृशा निपीय आशङ्कितवान् स वियोगिनां विपदे उदीतं धूमकेतुम् अशङ्कत ।

अनुवाद—भ्रमरों की पङ्क्ति से युक्त उन्नत-शेखर चम्पकपुष्प को अधीर दृष्टि से देखकर आशङ्कायुक्त नल ने (उसे) वियोगियों की विपत्ति के लिये उदित धूमकेतु समझा ।

मल्लि०—अलिस्रजेति । अलिस्रजा भ्रमरपङ्क्त्या उच्चशेखरमुन्नतशिरोभूषणम्, अलिमलिनाङ्गमित्यर्थः, (शिखास्वापीडशेखरवित्यमरः), चाम्पेयं चम्पकविकारं कुड्मलम्, ('अथ चाम्पेयः चम्पको हेमपुष्पकः' इत्यमरः) । नन्वयुक्तमिदम्, 'न षट्पदो गन्धफलीमजिघ्रत्' इत्यादावलीनां चम्पकस्पर्शाभावप्रसिद्धेरिति चेत्, नैवं किन्तु स्पृष्टेयन्तावतैवास्पर्शोक्तिः क्वचित् केषाञ्चित् उक्तिपरिहारः) अथवा चाम्पेयं नागकेसरम्, ('चाम्पेयः केसरो नागकेसरः काञ्चनाह्वयः' इत्यमरः), अधीरया दृशा निपीय विक्लवदृष्ट्या गाढं दृष्ट्वा अशङ्कितवान् किञ्चिदनिष्टमुत्प्रेक्षितवान् स नलः, (अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः इति लक्षणात्), वियोगिनां विपदे उदीतमुत्थितं धूमकेतुमशङ्कत अतर्कयदिति । (उत्प्रेक्षालङ्कारः) ।

टिप्पणी—धूमकेतु तारे को विपत्ति का कारण समझा जाता है । भ्रमरों से युक्त चम्पक-पुष्प भी विरहियों के लिये उद्दीपक होने के कारण विपत्ति का कारण था, इसलिये नल ने उसे धूमकेतु समझा । चाम्पेयम्—चम्पक-पुष्प अथवा नागकेसर । चम्पा-पुष्प के लिए प्रसिद्ध है कि उस पर भ्रमर नहीं बैठते हैं, इसलिये मल्लिनाथ ने चाम्पेय का अर्थ नागकेसर किया है । उदीतम्—उद्+ई (दिवादि०)+क्त ॥६१॥

गलत्परागं भ्रमिभङ्गिभिः पतत्
प्रसक्तभृङ्गावलि नागकेसरम् ।
स मारनाराचनिघर्षणस्खल-
ज्ज्वलत्कणं शाणमिव व्यलोकयत् ॥९२॥

**अन्वय**—स गलत्परागं भ्रमिभङ्गिभिः पतत् प्रसक्तभृङ्गावलि नागकेसरम् मारनाराचनिघर्षणस्खलज्ज्वलत्कणं शाणमिव व्यलोकयत् ।

**अनुवाद**—उस (नल) ने चक्कर खाकर गिरता हुआ नागकेसर, जिससे पराग गिर रहा था तथा जिसमें भ्रमर पङ्क्तियाँ लीन थीं, मानो, शाण देखा, जिससे कामदेव के बाणों की रगड़ से जलते हुए कण गिर रहे थे ।

**मल्लि०**—गलादिति । स नलो गलत्परागं निर्यद्रजस्कं भ्रमिभङ्गिभिः भ्रमणप्रकारैरुपलक्षितं पतद् भ्रश्यत् प्रसक्तभृङ्गावलि सक्तालिकुल नागकेसरं कुसुमविशेषं मारनाराचनिघर्षणैः स्मरशरकर्षणैः स्खलन्तः लुठन्तः ज्वलन्तश्च कणाः स्फुलिङ्गा यस्य तं शाणं निकषोत्पलमिव, (इत्युत्प्रेक्षा), व्यलोकयत् । ('शाणस्तु निकषः कषः' इत्यमरः) ।

**टिप्पणी**—नागकेसर का पुष्प भौंरों के बैठने के कारण काला दिखलाई देता था और उसमें से पीला पराग गिर रहा था । इसलिए नागकेसर में उत्प्रेक्षा की गई है कि वह मानो, (काला) शाण था जिससे कामदेव के बाणों की रगड़ से जलते हुए (पीले) कण निकल रहे थे ॥९२॥

तदङ्गमुद्दिश्य सुगन्धि पातुकाः
शिलीमुखालीः कुसुमाद् गुणस्पृशः ।
स्वचापदुर्निर्गतमार्गणभ्रमात्
स्मरः स्वनन्तीरवलोक्य लज्जितः ॥९३॥

**अन्वय**—सुगन्धि तदङ्गमुद्दिश्य गुणस्पृशः कुसुमात् पातुकाः स्वनन्तीः शिलीमुखालीः अवलोक्य स्मरः स्वचापदुर्निर्गतमार्गणभ्रमात् लज्जितः ।

अनुवाद—शोभन गन्ध वाले उसके (नल के) शरीर को लक्ष्य करके गुणों का स्पर्श करने वाली (सुगन्ध आदि गुणों की लोभी), पुष्प से गिरने वाली, गुञ्जार करती हुई भ्रमरों की पङ्क्तियों को देखकर कामदेव अपने धनुष से लक्ष्यभ्रष्ट होकर निकले हुए बाणों के भ्रम से लज्जित हुआ।

मल्लि०—तदङ्गमिति। सुगन्धि शोभनगन्धम्, (गन्धस्येत्यादिना समासान्त इकारः), तदङ्गं तस्य नलस्याङ्गमुद्दिश्य लक्ष्यीकृत्य गुणो गन्धादिः मौर्वी च, (गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तुष्विति वैजयन्ती), तत्स्पृशस्तद्युक्ताः, (स्पृशोऽनुदके क्विन्), कुसुमादपादानात् पातुका धावन्तीः, (लपपतेत्यादिना उकञ्प्रत्ययः), स्वनन्तीर्ध्वनन्तीः शिलीमुखालीः अलिपङ्क्तीः बाणपङ्क्तीश्चावलोक्य स्मरः स्वचापात् पौष्पाद् दुर्निर्गताः विषमनिर्गता ये मार्गणा बाणास्तद्भ्रमाद्धेतोर्लज्जितोऽभवत् नूनमिति शेषः। दुर्निर्गतेषवो ह्याधिकं स्वनन्तीति प्रसिद्धेः। (अत्र स्वनच्छिलीमुखेषु दुर्निर्गतमार्गणभ्रमाद् भ्रान्तिमदलङ्कारः स च शिलीमुखेति श्लेषानुप्राणितादुत्थापिता चेयं स्मरस्य लज्जितत्वोत्प्रेक्षेत्यनयोरङ्गाङ्गिभावेन सङ्करः)।

टिप्पणी—यहाँ 'शिलीमुखालीः' और गुणस्पृशः' में श्लेष है। शिलीमुखालीः—(१) भ्रमरों की पंक्तियां, (२ बाणों की पंक्तियां। गुणस्पृशः—(१) सुगन्ध आदि गुणों की लोभी, (२) धनुष की डोरी को छूने वाली। भ्रमरों की पंक्तियां पुष्पों को छोड़कर नल के सुगन्धित शरीर की ओर गुञ्जार करती हुई उड़ रही थीं, इससे कामदेव को यह भ्रम हो गया कि उसकी धनुष की डोरी को छूने वाले बाणों की पंक्तियां (शिलामुखाली) लक्ष्य भ्रष्ट होकर गूँज रही हैं, क्योंकि यह प्रसिद्ध है कि लक्ष्यभ्रष्ट बाण अधिक ध्वनि करते हैं। इसलिये कामदेव लज्जित हुआ ॥९३॥

मरुल्ललत्पल्लवकण्टकैः क्षतं
समुच्चरच्चन्दनसारसौरभम्।
स वारनारीकुचसञ्चितोपमं
ददर्श मालूरफलं पचेलिमम् ॥९४॥

अन्वय—स मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्चरच्चन्दनसारसौरभं वार-नारीकुचसञ्चितोपमं पचेलिमं मालूरफल ददर्श ।

अनुवाद—उसने वायु से हिलते हुए पल्लवों के कांटो से क्षत हुआ, और जिसकी चन्दन के समान उत्कृष्ट गन्ध फैल रही थी तथा जो वेश्या के स्तन की समानता कर रहा था, पका हुआ बेल का फल देखा ।

मल्लि०—मरुदिति । मरुता वायुना ललत्पल्लवानाञ्चलत्किसलयानां कण्टकैस्तीक्ष्णाग्रैरवयवैः क्षतम्, अन्यत्र विलसद्विटनखैः क्षतमिति गम्यते, समुच्चरत् परितः प्रसर्पत् चन्दनसारस्येव सौरभं यस्य तत्, अतएव, वारनारी-कुचेन वेश्यास्तनेन सञ्चितोपमं सम्पादितसादृश्यम्, (इत्युपमालङ्कारः । 'वारस्त्री गणिका वेश्या' इत्यमरः । कुलाङ्गनानखक्षताद्यनौचित्याद्वारविशेषणम्) पचेलिमं स्वतः पक्वम्, (कर्मकर्त्तरि केलिमर उपसंख्यानमिति पचेः केलिमर् प्रत्ययः), मालूरफलं बिल्वफलम्, (बिल्वे शाण्डिल्यशैलूषौ मालूरश्री-फलावपीत्यमरः), स नलो ददर्श ।

टिप्पणी—पचेलिमम्—√पच्+केलिमर् (एलिम), 'अपने आप पका' इस अर्थ में 'क्त' की जगह 'केलिमर्' प्रत्यय जुड़ा है ।९४।।

युवद्वयोचित्तनिमज्जनोचित-
प्रसूनशून्येतरगर्भगह्वरम् ।
स्मरेषुधीकृत्य धिया भियान्धया
स पाटलायाः स्तबकं प्रकम्पितः ।।९५।।

अन्वय—स युवद्वयीचित्तनिमज्जनोचितप्रसूनशून्येतरगर्भगह्वरं पाटलायाः स्तबकं भियान्धया धिया स्मरेषुधीकृत्य प्रकम्पितः ।

अनुवाद—वह (नल) युवक और युवती दोनों के चित्त को डुबाने में समर्थ पुष्पों से पूर्ण मध्यभाग रूपी कुहर वाले पाटला (पाडर) के गुच्छे को भय के कारण मूढ मति से कामदेव का तूणीर समझकर कांप गया ।

मल्लि०—युवेति । युवा च युवतिश्च तयोर्यूनोर्द्वयी मिथुनं तस्या-स्तयोः कर्मणोर्निमज्जने, ण्यन्ताल्लुट्) उचितैः क्षमैः प्रसूनैः पुष्पबाणैः

शून्येतरदशून्यं पूर्णं गर्भगह्वरं गर्भकुहरं यस्य तत् पाठलायाः पाटलवृक्षस्य स्तबकं कुसुमगुच्छं भियान्धया भयमूढया धिया भयन्जभ्रान्त्येत्यर्थः, स्मरेषुधीकृत्य कामतूणीकृत्य, तथा विभ्रम्य इत्यर्थः, अतएव भयात् प्रकम्पितश्चकम्पे। (अत्र 'पाटलस्तबके मदनतूणीरभ्रमात् भ्रान्तिमदलङ्कारः, 'कविसमतसादृश्याद्विषये विहितात्मनि। आरोप्यमाणानुभवो यत्र स भ्रान्तिमान्मतः, इति लक्षणात्)।

टिप्पणी—स्मरेषुधीकृत्य—स्मरस्य इषुधिः, स्मरेषुधिः, न स्मरेषुधिं कृत्वा इति स्मरेषुधीकृत्य, अर्थात् जो स्मरेषुधि नहीं है उसे स्मरेषुधि समझ कर, स्मरेषुधि + च्वि + √कृ + ल्यप्। प्रकम्पितः— प्र+√कम्प्+क्त (कर्तरि) ॥९५॥

मुनिद्रुमः कोरकितः शितिद्युति-
र्वनेऽमुनामन्यत सिंहिकासुतः।
तमिस्रपक्षत्रुटिकूटभक्षितं
कलाकलापं किल वैधवं वमन् ॥९६॥

अन्वय—अमुना वने कोरकितः शितिद्युति मुनिद्रुमः तमिस्रपक्षत्रुटिकूटभक्षितं वैधवं कलाकलापं वमन् सिंहिकासुतः अमन्यत किल।

अनुवाद—उसने (नल ने) वन में कलियाँ लगे हुए, कृष्ण छवि वाले अगस्त्य नामक वृक्ष को कृष्ण पक्ष में क्षय के व्याज खाये हुए चन्द्रमा की कलाओं के समूह को उगलता हुआ राहु समझा।

मल्लि०—मुनीति। अमुना नलेन वने कोरकितः सञ्जातकोरकः शितिद्युतिः पत्रेषु कृष्णच्छविः मुनिद्रुमोऽगस्त्यवृक्षः तमिस्रपक्षे त्रुटिकूटेन क्षयव्याजेन भक्षितम्, अभक्षितत्वे कुतः क्षय इति भावः, (अत्र कूटशब्देन क्षयापह्नवेन भक्षणारोपादपह्नवभेदः), वैधवं चन्द्रसम्बन्धि, (विधुः सुधांशुः शुभ्रांशुरित्यमरः), कलाकलापं कलासमूहं वमन्नुद्गिरन् सिंहिकासुतो राहुरमन्यत किल खलु ? (अत्र कोरकितशितद्युतित्वाभ्यां मुनिद्रुमस्येन्दुकलाकलापवमनविशिष्टराहुत्वोत्प्रेक्षा सा चोक्तापह्नवोत्थापितेति सङ्करः)।

टिप्पणी—मुनिद्रुमः—अगस्त्यवृक्ष। यहाँ कृष्णवर्ण अगस्त्यवृक्ष को राहु और उसकी धवल कलियों को चन्द्रमा की कलाओं के समान बताया गया है ॥६६॥

पुरो हठाक्षिप्ततुषारपाण्डर-
च्छदावृतेर्वीरुधि बद्धविभ्रमाः।
मिलन्निमीलं विदधुर्विलोकिताः
नभस्वतस्तं कुसुमेषु केलयः ॥६७॥

अन्वय—पुरो हठाक्षिप्ततुषारपाण्डरच्छदावृतेः नभस्वतः वीरुधि बद्धविभ्रमाः कुसुमेषु केलयः विलोकिताः तं मिलन्निमीलं विदधुः।

अनुवाद—संमुख वायु के, जिसने हठात् तुषार से धवल पत्रों का आवरण हटा दिया था, लता में किये गये भ्रमणों ने तथा पुष्पों के प्रति की गई क्रिडाओं ने देखी जाकर उस (नल) की आंखे बन्द कर दीं।

मल्लिनाथ—पुर इति। पुरोऽग्रे हठात् झटित्याक्षिप्ता आकृष्टा तुषारेण हिमेन पाण्डराणां छदानां पत्राणां तुषारवत् पाण्डरस्यच्छदस्याच्छादकस्य वस्त्रस्य चावृतिरावरणं येन तस्य नभस्वतो वायोः वीरुधि लतायां बद्धाः अनुबद्धा विभ्रमा भ्रमणानि विलासाश्च यासान्ताः कुसुमेषु विषये केलयः क्रीडाः कुसुमेषुकेलयः कामक्रीडाश्च विलोकिताः सत्यस्तं नृपं नलं मिलन्निमीलो मिलनं यस्य तं विदधुः, निमीलिताक्षञ्चक्रुरित्यर्थः, (विरहिणामुद्दीपकदर्शनस्य दुःसहदुःखहेतुत्वात्, अन्यत्र 'नेक्षेतार्कं न नग्नां स्त्रीं न च संस्पृष्टमैथुनामिति' निषेधादिति भावः। अत्र प्रस्तुतनभस्वद्विशेषणसामर्थ्यादप्रस्तुतकामुतीतेः समासोक्तिरलङ्कारः)।

टिप्पणी—इस श्लोक में समासोक्ति द्वारा अप्रस्तुत कामुकव्यवहार की भी प्रतीति होती है। राजा नल ने वायु के लता के साथ किये गये विलास और कुसुम के साथ की गई क्रीडा को देखकर आँखें बन्द कर लीं, क्योंकि विरही के लिये वह उद्दीपक थीं। 'कुसुमेषु केलयः' में सभङ्ग श्लेष है। 'कुसुमेषु केलयः' और 'कुसुमेषोः कामदेवस्य केलय इति कुसुमेषुकेलयः ॥६७॥

गता यदुत्सङ्गतले विशालतां
द्रुमाः शिरोभिः फलगौरवेण ताम् ।
कथं न धात्रीमतिमात्रनामितैः
स वन्दमानानभिनन्दति स्म तान् ॥९८॥

अन्वय—द्रुमाः यदुत्सङ्गतले विशालतां गताः तां धात्रीं फलगौरवेण अतिमात्रनामितैः शिरोभिः वन्दमानान् तान् स कथं न अभिनन्दति स्म ।

अनुवाद—वृक्ष जिस (भूमि) की गोद में विशालता को प्राप्त हुए, उस पृथ्वी की फलों के भार से अत्यन्त झुकाये हुए सिरों से वन्दना करते हुए उन (वृक्षों) का वह (नल) क्यों न अभिनन्दन करता ?

मल्लि०—गता इति । द्रुमा यस्या धात्र्या उत्सङ्गतले उपरि देशे च विशालतां विवृद्धिं गताः, तां धात्रीं भुवञ्च उपमातरं वा, (धात्री जनन्यामलकीवसुमत्युपमातृष्विति विश्वः । 'धः कर्मणि ष्ट्रन् इति' दधातेः ष्ट्रन् प्रत्ययः), फलगौरवेण फलभरेण सुकृतातिशयेन च हेतुना अतिमात्रं नामितैः प्रह्वीकृतैः, (नमेर्मित्वविकल्पाद्ध्रस्वाभावः): शिरोभिरग्रैः उत्तमाङ्गैश्च वन्दमानान् स्पृशतोऽभिवादयमानांश्च तान् प्रकृतान् द्रुमान्, (अतएव यच्छब्दानपेक्षा), स नलः कथं नाभिनन्दति स्म अभिननन्दैवेत्यर्थः । वृक्षाणां क्षेत्रानुरूपफलस्य सम्पत्तिं अपत्यानां च मातृभक्तिञ्च को नाम नाभिनन्दतीति भावः। (अत्रापि विशेषणसामर्थ्यात् पुत्रप्रतीतेः समासोक्तिरलङ्कारः) ।

टिप्पणी—इस श्लोक में भी समासोक्ति द्वारा पुत्र-व्यवहार की प्रतीति होती है । जिस प्रकार पुत्र बड़ा होकर धात्री का आदर करता है वैसे ही वृक्ष भी बड़े होकर फलभार से झुके हुए सिरों से पृथ्वी की वन्दना कर रहे थे । राजा वृक्षों की इस भक्ति को देखकर प्रसन्न हुआ, क्योंकि पुत्र भक्ति को देखकर प्रत्येक को प्रसन्नता होती है । नामितैः—√नम्+णिच्+क्त ॥९८॥

नृपाय तस्मै हिमितं वनानिलैः
सुधीकृतं पुष्परसैरहर्महः ।

विनिर्मितं केतकरेणुभिः सितं
वियोगिनेऽदत्त न कौमुदी मुदः ॥९९॥

अन्वय—वनानिलैः हिमितं पुष्परसैः सुधीकृतं केतकरेणुभिः सितं विनिर्मितम् अहर्महः कौमुदी तस्मै वियोगिने नृपाय मुदः न अदत्त ।

अनुवाद—वन की वायु से शीतल, पुष्पों के मकरन्द से अमृत बनाया हुआ, केतक-पुष्पों की धूलि से धवल, दिन के तेज (आतप) के रूप में चन्द्रिका ने उस विरही राजा (नल) को आनन्द न दिया ।

मल्लि०—अत्रातपस्य चन्द्रिकात्वनिरूपणाय तद्धर्मान् सम्पादयति । नृपायेति । वनानिलैः उद्यानवातैः हिमं शीतलं कृतं हिमितम्, (तत्करोतेर्ण्यन्तात् कर्मणि क्तः), पुष्परसैर्वनवातानीतैः मकरन्दैः सुधीकृतममृतीकृतं तथा केतकरेणुभिः सितं विनिर्मितं शुभ्रीकृतम् अह्नो महस्तेजः अहर्मह आतपः, (रोः सुपीति रेफादेशः), तदेव कौमुदी, (इति व्यस्तरूपकम्) वियोगिने तस्मै नृपाय मुदः प्रमोदान् नाधत्त न कृतवती, प्रत्युतोद्दीपकंवाभूदिति भावः ।

टिप्पणी—अहर्महः—अह्नः दिनस्य महः तेजः, आतप । वन की शीतल वायु, पुष्पमकरन्द तथा केतक पुष्पों के कारण धूप चन्द्रिका के समान सुखदायक थी, लेकिन विरहातुर नल को, उद्दीपक होने के कारण, वह भी आनन्द प्रदान न कर सकी । अदत्त—पाठान्तर 'अधत्त' ॥९९॥

वियोगभाजोऽपि नृपस्य पश्यता
तदेव साक्षादमृतांशुमाननम् ।
पिकेन रोषारुणचक्षुषा मुहुः
कुहूरुताऽऽहूयत चन्द्रवैरिणी ॥१००॥

अन्वय—वियोगभाजोऽपि नृपस्य तद् आननं साक्षाद् अमृतांशुमेव पश्यता रोषारुणचक्षुषा पिकेन मुहुः कुहूरुता चन्द्रवैरिणी आहूयत ।

अनुवाद—विरहातुर नृप के उस मुख को प्रत्यक्ष चन्द्रमा ही समझने

वाले, क्रोध से लाल आँखों वाले कोकिल ने बार-बार 'कुहू कुहू' की ध्वनि से चन्द्र की शत्रु (अमावस्या) बुलाई।

मल्लि०—वियोगेति। वियोगभाजोऽपि वियोगिनोऽपि नृपस्य तदाननमेव साक्षादमृतांशुं प्रत्यक्षचन्द्रं पश्यता अतएव रोषादद्यापि चन्द्रतां न जहातीति क्रोधादिवारुणचक्षुषा पिकेन चन्द्रवैरिणी कुहूर्निजालाप एव कुहूर्नष्टचन्द्रामावस्या, (इति श्लिष्टरूपकम्), ('कुहूः स्यात् कोकिलालापनष्टेन्दुकलयोरपि' इति विश्वः), मुहुराहूयत आहूता किम्, (इत्युत्प्रेक्षा पूर्वोक्तरूपकसापेक्षेति सङ्करः। अस्य चन्द्रस्येयमेव कुहूराह्वानीया स्यात् तत्कान्तिराहित्यसम्भवादिति भावः)।

टिप्पणी—'कुहूरुता'—कोयल की बोली का अनुकरणात्मक शब्द 'कुहू' है, कुहू अमावस्या को भी कहते हैं। इसलिये उत्प्रेक्षा की गई है कि कोयल अपनी 'कुहू-कुहू' की आवाज से मानो, अमावस्या को बुला रही थी, जिसमें चन्द्रमा नहीं उगता है। 'कुहूरुताऽऽहूयत' में सभङ्ग श्लेष है—(१) कुहूरुता आहूयत, (२) कुहूः (अमावस्या) उत आहूयत ॥१००॥

अशोकमर्थान्वितनामताशया
गताञ्छरण्यं गृहशोचिनोऽध्वगान्।
अमन्यतावन्तमिवैष पल्लवैः
प्रतीष्टकामज्वलदस्त्रजालकम् ॥१०१॥

अन्वय—एष पल्लवैः प्रतीष्टकामज्वलदस्त्रजालकम् अशोकम् अर्थान्वितनामताशया शरण्यं गतान् गृहशोचिनो अध्वगान् अवन्तमिव अमन्यत।

अनुवाद—इस (नल) ने अशोक नामक वृक्ष को, जिसने नूतन पत्रों से कामदेव के जलते हुए अस्त्र-समूह को (अपने ऊपर) लिया हुआ था, अर्थानुसारी नाम वाला होने की आशा से शरण में आये हुए; पत्नी की चिन्ता करने वाले पथिकों की, मानो, रक्षा करता हुआ समझा।

मल्लि०—अशोकमिति। एष नलः पल्लवैः प्रतीष्टानि प्रतिगृहीतानि

संछन्नानि कामस्य ज्वलदस्त्राणि तद्रूपकाणि जालकानि क्षारकाणि बालमुकुल-गुच्छा येन तम्, पल्लवसञ्छन्नकुसुमरूपकामास्त्रमित्यर्थः, (अन्यथा तद्दर्शनादेव ते म्रियेरन्निति भावः), अशोकमत एवार्थान्वितनामता नास्ति शोकोऽस्मिन्नत्यन्वर्थ-संज्ञा तत्कृतया आशया अस्मानप्यशोकान् करिष्यतीत्यभिलाषेण शरणे रक्षणे साधुं समर्थं शरण्यम्, (मत्वेति शेषः। 'शरण रक्षणे गृहे' इति विश्वः। तत्र साधुरिति यत्प्रत्ययः), आगतान् शरणागतानित्यर्थः, गृहान् दारान् शोचन्तीति गृहशोचिनः गृहानुद्दिश्य शोचन्त इत्यर्थः, ('गृहः पत्न्यां गृहे स्मृतः' इति विश्वः), अध्वगान् प्रोषितान् अवन्तमिव (शरणागतरक्षणे महाफलस्मरणादन्यथा महा-दोषस्मरणाच्च रक्षन्तमिवेत्यर्थः) अमन्यत ज्ञातवान्। अस्त्रभीरूणां तद्गोपनमेव रक्षणाय इति भावः।

टिप्पणी—प्रतीष्टकामज्वलदस्त्रजालकम् (विशेषण)— इस पद के कई अर्थ हो सकते हैं। ऊपर अनुवाद में इसका अर्थ किया गया है—पल्लवों द्वारा अपने ऊपर ले लिया है कामदेव के जलते हुए अस्त्र-समूह को जिसने, अर्थात् अशोक वृक्ष ने कामदेव के अस्त्रों के प्रहार को पथिकों पर नहीं होने दिया प्रत्युत शरणागतवत्सल ने उसे अपने शरीर पर ओट लिया, इसीलिये उसके पल्लव लाल हो गये। (२) मल्लिनाथ ने प्रतीष्ट का अर्थ 'ढका हुआ' किया है और अस्त्र-जालक में रूपक माना है। उसके अनुसार इसका यह अर्थ होगा—पल्लवों से ढक लिये हैं कामदेव के जलते हुए अस्त्र-रूपी जालक (पुष्प-गुच्छक) जिसने, अर्थात् पुष्प-गुच्छक ही कामदेव के जलते हुए अस्त्र थे, उनको छिपाने मात्र से अशोक वृक्ष पथिकों की रक्षा कर रहा था ॥१०१॥

विलासवापीतटवीचिवादनात्
पिकालिगीतेः शिखिलास्यलाघवात्।
वनेऽपि तौर्य्यत्रिकमाराराध तं
क्व भोगमाप्नोति न भाग्यभाग्जनः ॥१०२॥

अन्वय—विलासवापीतटवीचिवादनात् पिकालिगीतेः शिखिलास्य लाघवात् तौर्यत्रिकं वनेऽपि तम् आरराध। भाग्यभाग् जनः क्व भोगं न आप्नोति।

अनुवाद—क्रीडा-वापि के तट पर तरङ्गों के बजने, कोयल तथा भ्रमरों के गाने और मयूरों का नृत्य की निपुणता से तौर्यत्रिक (तीन प्रकार का तौर्य —वाद्य, गीत और नृत्य वन में भी) उसकी सेवा कर रहा था। भाग्यशाली लोग कहाँ भोग नहीं प्राप्त कर लेते हैं ?

मल्लि०—विलासेति । विलासवापी विहारदीर्घिका तस्यास्तटे वीचीनां वादनात्पिकानामलीनाञ्च गीतेर्गानात् शिखिनां मयूराणां लास्यलाघवात् नृत्यनैपुण्यात् च वनेऽपि तं नलं तौर्य्यत्रिकं नृत्यगीतवाद्यत्रयं कर्तृ आरराध आराधयामास । तथा हि भाग्यभाग् भाग्यवान् जनः क्व भुज्यत इति भोगः सुखं तं नाप्नोति, सर्व्वत्रैवाप्नोतीत्यर्थः । (सामान्येन विशेषसमर्थनरूपोऽर्थान्तर-न्यासः) ॥१०२॥

तदर्थमध्याप्य जनेन तद्वने
शुका विमुक्ताः पटवस्तमस्तुवन् ।
स्वरामृतेनोपजुगश्च शारिका-
स्तथैव तत्पौरुषगायनीकृताः ॥१०३॥

अन्वय—जनेन तदर्थमध्याप्य तद्वने विमुक्ताः पटवः शुकाः तम् अस्तुवन् । तथैव च तत्पौरुषगायनीकृताः शारिकाः स्वरामृतेन उपजगुः ।

अनुवाद—लोगों द्वारा नल के लिये पढ़ाकर उस वन में छोड़े गये चतुर शुकों ने उसकी स्तुति की, और उसी प्रकार उस (नल) के पराक्रम का गायक करने वाली मैनाओं ने अमृत के तुल्य (मधुर) स्वर से (उसका) गान किया ।

मल्लि०—तदर्थमिति । जनेन सेवकजनेन तदर्थं नलप्रीत्यर्थमध्याप्य स्तुतिं पाठयित्वा तस्मिन् वने विमुक्ताः विसृष्टाः पटवः स्फुटगिरः शुकास्तं नलमस्तुवन्, तथैव शुकवदेव तदर्थमध्याप्य मुक्ताः तत्पौरुषस्य नलपराक्रमस्य गायिन्यो गायकाः कृता गायनीकृताः शारिकाः शुकवध्वः स्वरामृतेन, मधुरस्वरेणेत्यर्थः, उपजगुश्च ।

टिप्पणी—अध्याप्य—अधि + √इ + णिच् + ल्यप् ॥१०३॥

इतीष्टगन्धाढ्यमटन्नसौ वनं
पिकोपगीतोऽपि शुकस्तुतोऽपि च ।
अविन्दतामोदभरं बहिश्चरं
विदर्भसुभ्रू विरहेण नान्तरम् ।।१०४।।

अन्वय -- इति इष्टगन्धाढ्यं वनम् अटन् पिकोपगीतोऽपि शुकस्तुतोऽपि च असौ बहिश्चरम् आमोदभरम् अविन्दत, विदर्भसुभ्रू विरहेण आन्तरं न ।

अनुवाद—इस प्रकार सुगन्ध-सम्पन्न वन में घूमते हुए, कोयलों से गान किये गये और शुकों से स्तुति किये गये भी इसने बाहरी गन्ध की अतिमात्रा ही प्राप्त की. विदर्भदेश की सुन्दर भौं वाली (दमयन्ती) के विरह के कारण आन्तरिक (हार्दिक) आनन्द का अतिरेक प्राप्त न किया ।

मल्लि०—इतीति । इतीत्थमिष्टगन्धाढ्यम् इष्टसौगन्धसम्पन्नं वनमटन्, ('देशकालाध्वगन्तव्याः कर्म्मसंज्ञा ह्यकर्म्मणामिति' वनस्य देशत्वात् कर्म्मत्वम्), असौ नलः पिकैः कोकिलैरुपगीतोऽपि शुकैः स्तुतोऽपि च परं केवलम्, (परं स्यादुत्तमानाप्तवैरिदूतोऽपि केवल इति विश्वः), बहिरामोदभरं सौरभ्यातिरेकमेवाविन्दतविदर्भसुभ्रू विरहेण हेतुना आन्तरमामोदभरमानन्दातिरेकरूपन्नाविन्दत न लब्धवान्, प्रत्युत दुःखमेवान्वभूदिति भावः । (आमोदो गन्धहर्षयोरिति विश्वः) ।

टिप्पणी—बहिश्चरम्—बाह्य, ऊपरी, आन्तरिक का विरोधी । पाठान्तर 'बहिः परम्' भी पाया जाता है । मल्लिनाथ ने 'बहिः परम्' पाठ मानकर ही इस श्लोक की व्याख्या की है । इस पाठ के अनुसार तीसरे चरण का अर्थ इस प्रकार होगा—इसने केवल (परम्) बाहर गन्ध की अधिकता प्राप्त की । आमोदभरम्—इस पद के दो अर्थ हैं—(१) गन्ध की अधिकता । (२) हर्ष की अधिकता ।।१०४।।

करेण मीनं निजकेतनं दधद्
द्रुमालवालाम्बुनिवेशशङ्कया ।

व्यतर्कि सर्वर्तुघने वने मधुं
स मित्रमत्रानुसरन्निव स्मरः ॥१०५॥

अन्वय—स निजकेतनं मीनं द्रुमालवालाम्बुनिवेशशङ्कया करेण दधद् सर्वर्तुघने अत्र वने मित्रं मधुम् अनुसरन् स्मरः इव व्यतर्कि ।

अनुवाद—वह (नल), अपने ध्वजचिह्न मकर को वृक्षों के थाँवलों के जल में प्रवेश के भय से हाथ में धारण करता हुआ, सब ऋतुओं से व्याप्त इस वन में (अपने) मित्र वसन्त (ऋतु) को खोजता हुआ, मानो कामदेव समझा गया ।

मल्लि०—करेणेति । स नलः निजकेतनं निजलाञ्छनं मीनं द्रुमालवालाम्बुषु निवेशशङ्कया प्रवेशभिया करेण दधत्, तादृक्शुभरेखाव्याजेन दधान इत्यर्थः, सर्वर्तुघने सर्वर्तुसङ्कुले अत्र अस्मिन् वने मित्रं सखायं मधुं वसन्तवसन्तमनुसरन् अन्विष्यन् स्मर इव व्यतर्कि, इत्युत्प्रेक्षा ।

टिप्पणी—मीनं करेण दधत्—राजा नल के हाथ में मकर रेखा का चिह्न था, जो कि चक्रवर्ती-होने का लक्षण समझा जाता है । दैवत-कथा में कामदेव का ध्वजचिह्न भी मकर कहा जाता है । इसलिये उत्प्रेक्षा की गई है कि नल, मानो कामदेव था जिसने अपने ध्वजचिह्न मकर को इस डर से कि कहीं वह वृक्षों के थाँवलों के पानी में न घुस जाय, हाथ में पकड़ रक्खा था और जो उस वन में, जिसमें सब ऋतुएँ एक साथ एकत्रित थीं, अपने मित्र वसन्त ऋतु को खोजने आया था । व्यतर्कि–वि+तर्क्+लुङ् (कर्मवा० प्र० पु० एकव०) । दधत्—√धा+शतृ (पुंल्लिङ्ग प्रथमा एकव०) ॥१०५॥

लताबलालास्यकलागुरुस्तरु-
प्रसूनगन्धोत्करपश्यतोहरः ।
असेवतामुं मधुगन्धवारिणि
प्रणीतलीलाप्लवनो वनानिलः ॥१०६॥

अन्वय – लतावलालास्यकलागुरुः तरुप्रसूनगन्धोत्करपश्यतोहरः मधुगन्धवारिणि प्रणीतलीलाप्लवनः वनानिलः अमुम् असेवत ।

अनुवाद—लतारूपी अबलाओं का मधुरनृत्य-कला में गुरु, वृक्षों के पुष्पों की गन्ध-सम्पत्ति का चोर और मकरन्द रूपी गन्धयुक्त जल में जल-क्रीडा करने वाला वन-पवन उसकी सेवा कर रहा था ।

मल्लि०—लतेति । लता एवाबलास्तासां लास्यकलासु मधुरनृत्तविद्यासु गुरुरुपदेष्टा, इति मान्द्योक्तिः, तरुप्रसूनगन्धोत्कराणां द्रुमकुसुमसौरभसम्पदां पश्यतोहरः पश्यन्तमनादृत्य हरः प्रसह्यापहर्त्तेत्यर्थः, ('पश्यतो यो हरत्यर्थं स चौरः पश्यतोहरः' इति हलायुधः । पचाद्यच्, 'षष्ठी चानादरे' इति षष्ठी । 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेष्विति' वक्तव्यादलुक्), सौरभ्यमुक्तम्, मधु मकरन्द एव गन्धवारि गन्धोदकं तत्र प्रणीतलीलाप्लवनः, एतेन कृतलीलावगाहन इति शैत्योक्तिः, ईदृग्वनानिलोऽमुं नलमसेवत । गुणवान् सेवकः सेव्यप्रियो भवतीति भावः ।

टिप्पणी—पश्यतोहरः—लुटेरा, देखते देखते का हरने वाला, यहाँ समास होने पर भी पूर्वपद की विभक्ति का लोप नहीं हुआ है ॥१०६॥

अथ स्वमादाय भयेन मन्थना-
च्चिररत्नरत्नाधिकमुच्चितं चिरात् ।
निलीय तस्मिन्निवसन्नपांनिधि-
र्वने तडागो ददृशेऽवनीभुजा ॥१०७॥

अन्वय—अथ अवनीभुजा तडागः मन्थनाद् भयेन चिरात् उच्चितं चिररत्नरत्नाधिकं स्वम् आदाय तस्मिन् वने निलीय निवसन् अपांनिधिः ददृशे ।

अनुवाद—इसके बाद राजा ने तालाब, मानो, मन्थन के भय से चिरकाल में संचित, प्राचिन श्रेष्ठ वस्तुओं की अधिकता वाले धन को लेकर उस वन में छिपकर रहता हुआ समुद्र, देखा ।

मल्लि०—अथेति । अथ वनालोकनानन्तर मन्थनाद्भयेन, धनार्थं पुनर्मं-

थिष्यतीति भयादित्यर्थः. चिरादुच्चितं सञ्चितं चिरत्नं चिरन्तनम्, ('चिरपरुत्परारिभ्यस्त्नो वक्तव्यः' इति त्नप्रत्ययः) तच्च तद्रत्नाधिकं श्रेष्ठवस्तुभूयिष्ठ चेति चिरत्नरत्नाधिकम्, (रत्नं स्वजातौ श्रेष्ठेऽपीत्यमरः) स्वं धनमादाय तस्मिन् वने निलीयान्तर्धाय निवसन् वर्त्तमानोऽपाम्निधिरिव, इत्युत्प्रेक्षा), तडागः सरोविशेषोऽवनीभुजा राज्ञा नलेन ददृशे दृष्टः ।

टिप्पणी—यहाँ वन में स्थित तडाग में समुद्र की उत्प्रेक्षा की गई है । ददृशे—√दृश्+लिट् (कर्मवाच्य) ॥१०७॥

पयोनिलीनाभ्रमुकामुकावली-
रदाननन्तोरगपुच्छसच्छवीन् ।
जलार्धरुद्धस्य तटान्तभूभिदो
मृणालजालस्य निभाद्बभार यः ॥१०८॥

अन्वय—यः जलार्धरुद्धस्य तटान्तभूभिदो मृणालजालस्य निभात् अनन्तोरगपुच्छसच्छवीन् पयोनिलीनाभ्रमुकामुकावलीरदान् बभार ।

अनुवाद—जो (तलाब) जल में आधे छिपे हुये, तटवर्ती भूमि को भेदने वाले मृणाल के समूह के व्याज से शेषनाग की पूँछ के समान कान्ति वाले, जल में छिपे हुए ऐरावत हाथियों की पंक्ति के दाँतों को धारण कर रहा था ।

मल्लि०—यदुक्तं धनमादायेति, तदेवात्र, सम्पादयति नवभिः श्लोकैः—पय इत्यादिभिः । यस्तडागः जलेनार्द्धरुद्धस्य अर्द्धच्छन्नस्य तटान्तभूभिदस्तटप्रान्तनिर्गतस्येत्यर्थः मृणालजालस्य बिसवृन्दस्य निभाद्व्याजात्, (इत्यपह्नवालङ्कारः । 'निभो व्याजसदृक्षयोरिति' विश्वः), अनन्तोरगस्य शेषाहेः पुच्छेन सच्छवीन् सवर्णान्, तद्वद्धवलानित्यर्थः, पयोनिलीनानामभ्रमुकामुकावलीनामैरावतश्रेणीनां रदान् दन्तान् बभार । (तत्रैक एवैरावतः अत्र त्वसख्या इति व्यतिरेकः । अभ्रमुकामुका इति द्वितीयासमासो मधुपिपासुवत् 'न लोका' इत्यादिना षष्ठीप्रतिषेधात् । लषपतेत्यादिना कमेरुकञ्प्रत्ययः ।

टिप्पणी—वन में स्थित तडाग का नौ श्लोकों में वर्णन किया गया है। पहले श्लोक में तडाग को समुद्र बतलाया गया है। उसी का विस्तार में वर्णन इस और आगे के श्लोकों में किया गया है। यह तालाब मृणाल-समूह के व्याज से अनेक ऐरावतों के दाँतों को धारण कर रहा था। समुद्र में केवल एक ऐरावत हाथी के दाँत थे, लेकिन इसमें मृणाल के रूप में सैकड़ों ऐरावतों के दाँत थे। इस प्रकार यह तालाब समुद्र से भी बढ़कर था। अभ्रमुकामुक—ऐरावत गज, दैवतकथा के अनुसार ऐरावत की पत्नी का नाम अभ्रमु है और ऐरावत का वर्ण धवल माना जाता है ॥१०८॥

तटान्तविश्रान्ततुरङ्गमच्छटा-
स्फुटानुबिम्बोदयचुम्बनेन यः ।
बभौ चलद्वीचिकशान्तशातनैः,
सहस्रमुच्चैःश्रवसामिव श्रयन् ॥१०९॥

अन्वय—यः तटान्तविश्रान्ततुरङ्गमच्छटास्फुटानुबिम्बोदयचुम्बनेन वीचिकशान्तशातनैः चलत् उच्चैःश्रवसां सहस्रम् इव श्रयन् बभौ।

अनुवाद—जो (तलाव) तट के समीप में ठहरे हुये घोड़ों के समूह के स्पष्ट प्रतिबिम्ब के आविर्भाव के चुम्बन (सम्पर्क) से तरङ्ग रूपी कशा के छोर के ताडन से चञ्चल, सहस्र उच्चैःश्रवस् नामक घोड़ों को, मानो, धारण करता हुआ शोभित हो रहा था।

मल्लि०—तटान्तेति। यस्तडागस्तटान्ते तीरप्रान्ते विश्रान्ता या तुरङ्गमच्छटा नलानीताश्वश्रेणी तस्या स्फुटानुबिम्बोदयचुम्बनेन प्रकटप्रतिबिम्बाविर्भावव्याप्त्या निमित्तेन वीचय एव कशास्तासाम् अन्तशातनैरग्रताडनैः, (अश्वादेस्ताडनी कशेत्यमरः), चलदुल्ललदुच्चैःश्रवसां सहस्रं श्रयन् प्राप्नुवन्निव बभौ, (इत्युत्प्रेक्षा व्यतिरेकश्च पूर्ववत्। एतेन नलाश्वानामुच्चैःश्रवःसाम्यं गम्यत इत्यलङ्कारेण वस्तुध्वनिः)।

टिप्पणी—तडाग के तट पर राजा नल के घोड़े विश्राम कर रहे थे, उनका

प्रतिविम्ब जल में पड़ रहा था। इससे प्रतीत होता था, मानो सहस्रों उच्चैः-श्रवस् नाम के घोड़े उस तालाव में थे, जबकि समुद्र में से केवल एक ही उच्चैः-श्रवस् निकला था। इससे यह भी ध्वनित होता है कि नल के घोड़े उच्चैः श्रवस् के तुल्य थे ॥१०९॥

सिताम्बुजानां निवहस्य यश्छला-
द्बभावलिश्यामलितोदरश्रियाम् ।
तमःसमच्छायकलङ्कसङ्कुलं,
कुलं सुधांशोर्वहुलं वहन् वहु ॥११०॥

अन्वय—यः अलिश्यामलितोदरश्रियां सिताम्बुजानां निवहस्य छलात् तमः-समच्छायकलङ्कसङ्कुलं बहुलं बहुसुधांशोः कुलं वहन् बभौ।

अनुवाद—जो (तालाब) भ्रमरों से श्यामल मध्यभाग की शोभा वाले धवल कमलों के समूह के व्याज से अन्धकार के समान कान्ति वाले कलङ्क से व्याप्त, पूर्ण चन्द्रमा के महान् समूह को धारण करता हुआ शोभित हो रहा था।

मल्लि०—सितेति। यस्तडागः अलिभिः श्यामलितोदरश्रियां श्यामीकृत-मध्यशोभानां सिताम्बुजानां पुण्डरीकाणां निवहस्य छलात तम.समच्छायः तिमिरवर्णः यः कलङ्कः तेन सङ्कुलं बहुलं संपूर्णं बह्वनेकं सुधांशोश्चन्द्रस्य कुलं वशं बहन् सन् बभौ। (तत्र छलशब्देन पुण्डरीकेषु ।वपयापह्नवेन चन्द्रत्वाभेदादपह्नवभेदः व्यतिरेकस्तु पूर्ववत्)।

टिप्पणी—इस श्लोक में भी तालाब में श्वेत कमलों के व्याज से अनेक चन्द्रमाओं का होना बतलाकर उसे समुद्र से बढ़कर कहा गया है ॥११०॥

रथाङ्गभाजा कमलानुषङ्गिणा
शिलीमुखस्तोमसखेन शार्ङ्गिणा ।
सरोजिनीस्तम्बकदम्बकैतवा-
न्मृणालशेषाहिभुवान्वयायि यः ॥१११॥

अन्वय—यः सरोजिनीस्तम्बकदम्बकैतवात् रथाङ्गभाजा कमलानुषङ्गिणा शिलीमुखस्तोमसखेन मृणालशेषाहिभुवा शार्ङ्गिणा अन्वयायि ।

अनुवाद—जो (तालाब) कमलिनी के गुच्छों के समूह के व्याज से चक्रधारी, कमला से युक्त, भ्रमर-समूह के सदृश (वर्ण वाले), मृणाल जैसे शेषनाग पर स्थित विष्णु से अनुगत था ।

मल्लि०—रथाङ्गेति । यस्तडागो रथाङ्गं चक्रवाकः चक्रायुधञ्च, (यद्यपि चक्रवाके रथाङ्गनामेति च प्रयोगो रूढः, तथापि प्रायेणास्य चक्रशब्द-पर्य्यायित्वप्रयोगदर्शनात् पदस्याप्युभयत्र प्रयोगं मन्यते कविः), तद्भाजा, (भजो ण्विः), कमलैः कमलया चानुषङ्गिणा संसर्गवता शिलीमुखस्तोमसखेन अलिकुल-सहचरेण, अन्यत्र सखिशब्दः सादृश्यवचनः तत्सवर्णेनेत्यर्थः, मृणालं शेषाहिरिव, (इत्युपमितसमासः), तद्भुवा तदाकरेण, अन्यत्र मृणालमिव शेषाहिः तद्भुवा तदाधारेण, शार्ङ्गिणा विष्णुना सरोजिनीनां स्तम्बा गुल्माः, (अप्रकाण्डे स्तम्ब-गुल्मामित्यमरः), तेषां कदम्बस्य कैतवान्मिषात् अन्वयायि अनुयातोऽनुसृतोऽधि-ष्ठित इति यावत् । (अत्रापि कैतवशब्देन स्तम्बत्वमपह्नुत्य शार्ङ्गित्वारोपादप-ह्नवभेदः) ।

टिप्पणी—यहाँ शब्दसाम्य पर आधारित सादृश्य के कारण कैतव शब्द से सरोजिनीस्तम्बकदम्ब को छिपाकर शार्ङ्गी का आरोप किया गया है । तालाब में विष्णु की स्थिति के कथन से उसका समुद्र होना भी कह दिया गया है । रथाङ्गभाजा—(१) चक्र को धारण करने वाला, (२) चक्रवाक नामक पक्षियों से युक्त; रथाङ्ग + √भज् + ण्वि । कमलानुषङ्गिणा—(१) कमला (लक्ष्मी) के सहचर, (२) कमलों से युक्त । शिलीमुखस्तोमसखेन—(१) भ्रमर-समूह के सदृश (वर्ण वाला), (२) भ्रमर-समूह का सखा; क्योंकि सरोजिनीस्तम्ब पर भ्रमर मण्डराते हैं, इसलिये उसे भ्रमरों का सखा कहा गया है । मृणालशेषा-हिभुवा—(१) मृणाल के सदृश (वर्ण वाला) शेषनाग पर रहने वाला, (२) शेषनाग सदृश मृणाल पर उगने वाला । अन्वयायि—अनु + √या + लुङ् (कर्मवाच्य) अन्यपु० एकव० ॥१११॥

तरङ्गिणीरङ्कजुषः स्ववल्लभा-

स्तरङ्गरेखा बिभराम्बभूव यः ।

दरोद्गतैः कोकनदौघकोरकै-

र्धृतप्रवालाङ्कुरसञ्चयश्च यः ॥११२॥

अन्वय—यः अङ्कजुषः तरङ्गरेखाः स्ववल्लभाः तरङ्गिणीः बिभराम्बभूव । यः च दरोद्गतैः कोकनदौघकोरकैः धृतप्रवालाङ्कुरसञ्चयः (आसीत्) ।

अनुवाद—जो (तालाब) अङ्कवर्तिनी तरङ्गों को, मानो, अपनी पत्नी नदियों को धारण कर रहा था, और जो कुछ खिली हुई लाल कमलों की कलियों के रूप में प्रवालों (मूंगों) के अङ्कुर-समूह को धारण कर रहा था ।

मल्लि०—तरङ्गिणीरिति । यस्तडागोऽङ्कजुषोऽन्तिकभाजः उत्सङ्गसङ्गिन्यश्च वा तरङ्गरेखास्तरङ्गराजीरेव स्ववल्लभास्तरङ्गिणीः, (इति व्यस्तरूपकम्), बिभराम्बभूव बभार (भीह्रीभृहुवां श्लुवच्चेति भृञो विकल्पाद् आम् प्रत्यय.) । किञ्च यस्तडागो दरोद्गतैरीषदुद्बुद्धैः कोकनदौघकोरकैः रक्तोत्पलषण्डकलिकाभिः धृतप्रवालङ्कुरसञ्चयश्च धृतविद्रुमाङ्कुरनिकरश्चेति । (अत्रापि कोकनदकोरकाणां विद्रुमत्वे रूपणाद्रूपकालङ्कारः) ।

टिप्पणी—यहाँ भी तरङ्गों में नदियों तथा कोकनद-कोरक में प्रवालाङ्कुर के आरोप से तालाब का समुद्र होना कहा गया है । बिभराम्बभूव—√भृ+आम्+भू (अनुप्रयोग) +लिट् ॥११२॥

महीयसः पङ्कजमण्डलस्य य-

श्छलेन गौरस्य च मेचकस्य च ।

नलेन मेने सलिले निलीनयो-

स्त्विषं विमुञ्चन् विधुकालकूटयोः ॥११३॥

अन्वय—यः नलेन महीयसः गौरस्य मेचकस्य च पङ्कजमण्डलस्य छलेन सलिले निलीनयोः विधुकालकूटयोः त्विषं विमुञ्चन् मेने ।

अनुवाद—जिस (तालाब) को नल ने बड़े श्वेत और नील कमलों के समूह के व्याज से जल में छिपे हुए चन्द्रमा और कालकूट की कान्ति को प्रकट करता हुआ जाना।

मल्लि०—महीयस इति। यस्तडागः महीयसो महत्तरस्य गौरस्य च मेचकस्य च पङ्कजमण्डलस्य सितासितसरोजयोश्छलेन सलिले निलीनयोः विधु-कालकूटयोः, सितासितयोरिति भावः त्विषं विमुञ्चन् विसृजन्निव नलेन मेने। (अत्र छलेन विमुञ्चन्निवेति सापह्नवोत्प्रेक्षा)।

टिप्पणी—यहाँ श्वेत और नील कमलों का 'छल' शब्द से अपह्नव करके उनमें चन्द्रमा और कालकूट का आरोप किया गया है। तालाब में चन्द्रमा और कालकूट के वर्णन से उसका समुद्र होना कहा गया है। मेने- √मन् + लिट् (कर्मवा०) ॥११३॥

चलीकृता यत्र तरङ्गरिङ्गणै-
रबालशैवाललतापरम्पराः।
ध्रुवं दधुर्वाडवहव्यवाडव-
स्थितिप्ररोहत्तमभूमधूमताम् ॥११४॥

अन्वय—यत्र तरङ्गरिङ्गणैः चलीकृताः अबालशैवाललतापरम्पराः वाडवहव्यवाडवस्थितिप्ररोहत्तमभूमधूमतां दधुः ध्रुवम्।

अनुवाद—जिस (तालाब) में तरङ्गों के कम्पनों से चञ्चल की गईं, बड़ी सिवार की पङ्क्तियां वडवानल के नीचे रहने के कारण चढ़ती हुई अधिकता वाली धूम दशा को, मानो, धारण कर रही थीं।

मल्लि०—चलीकृता इति। यत्र यस्मिन् तडागे तरङ्गरिङ्गणैस्तरङ्गकम्पनैश्चलीकृताः चञ्चलीकृताः अबालानां कठोराणां शैवाललतानां परम्पराः पङ्क्तयः हव्यं वहतीति हव्यवाडग्निः, (वहश्चेति ण्विप्रत्ययः। तस्य छन्दोमात्रविषयत्वात् अनादरेण भाषायां प्रयोगः), वाडवहव्यवाहो वाडवाग्नेरवस्थित्यान्तरवस्थानेन प्ररोहत्तमो बहिःप्रादुर्भवत्तमो भूमा येषान्ते च ते धूमाश्च तेषां भावस्तत्ता तां दधुः वह्नेरुत्थितधूमपटलवद् बभुरित्यर्थः। ध्रुवमित्युत्प्रेक्षायाम्।

टिप्पणी—यहाँ सिवार-पंक्ति में धूमराशि की उत्प्रेक्षा की गई है। इस प्रकार तालाब में वाडवाग्नि का होना वर्णन करने से उसे समुद्र के समान कहा गया है। चलीकृता:—अचला: चला:, कृता:, √चल्+च्वि+क्त। हव्यवाड्—अग्नि, हव्य को ले जाने वाला; 'हव्यवाड' वैदिक प्रयोग है, हव्य+√वह्+ण्वि। ११४॥

प्रकाममादित्यमवाप्य कण्टकैः
करम्बितामोदभरं विवृण्वती।
धृतस्फुटश्रीगृहविग्रहा दिवा
सरोजिनी यत्प्रभवाप्सरायिता ॥११५॥

अन्वय—आदित्यम् अवाप्य कण्टकैः प्रकामं करम्बिता आमोदभरं विवृण्वती दिवा धृतस्फुटश्रीगृहार्वगृहा यत्प्रभवा सरोजिनी अप्सरायिता।

अनुवाद—सूर्य को प्राप्त करके काँटों से अत्यन्त दन्तुरित, गन्धराशि को प्रकट करती हुई दिन में खिले हुए कमलों को शरीर पर धारण किये हुए, जिस (तालाब) में उत्पन्न कमलिनी, (आदित्य [अदिति-पुत्र, इन्द्र] को पाकर पुलकों से युक्त, हर्ष की अधिकता को प्रकट करती हुई, स्वर्ग में स्पष्ट रूप से शोभा के आस्पद शरीर को धारण की हुई) अप्सरा के समान प्रतीत होती थी।

मल्लि०—प्रकाममिति। आदित्यं सूर्य्यमवाप्य प्रकामं कण्टकैः नालगतैः तीक्ष्णाग्रैरवयवैः करम्बिता दन्तुरिता, अन्यत्रादित्यमदितिपुत्रमिन्द्रमवाप्य कण्टकैः पुलकैः करम्बिता, अतएवामोदभरं परिमलसम्पदमानन्दसम्पदं च विवृण्वती प्रकटयन्ती, दिवा दिवसे धृतानि स्फुटश्रीगृहाणि पद्मानि यस्य स विग्रहः स्वरूप यस्याः सा, अन्यत्र दिवा स्वर्गेण स्फुटश्रीगृहमुज्ज्वलशोभास्पदं विग्रहो देहो यस्याः सा स्वर्गलोकवासिनीत्यर्थः, यस्तडागः प्रभवः कारणं यस्याः सा तज्जन्या सरोजिनी पद्मिनी अप्सरायिता अप्सरा इवाचरिता, ('उपमानात्कर्त्तुः क्यङ् सलोपश्चेति' कर्त्तरि क्तः, 'अजोसोऽप्सरसोः' इत्यप्सरसः सकारलोपः। श्लिष्टविशेषणेयमुपमा)।

टिप्पणी—यहाँ श्लेष की सहायता से शब्दसाम्य से उत्थापित सादृश्य के कारण कमलिनी को अप्सरा के समान कहा गया है। समुद्रमन्थन के समय रत्नों के साथ अप्सरायें भी समुद्र से उत्पन्न हुई थीं; उस तालाब से भी सरोजिनी के रूप में अप्सरा उत्पन्न हुई थी, इसलिये वह तालाब भी समुद्र ही था। श्लिष्ट शब्दों के दूसरे अर्थ अनुवाद में ही दे दिये हैं। अप्सरायिता—अप्सरा इव आचरतीति अप्सरायत, अप्सरस्+क्यङ् (नामधातु), कर्तृवाच्य में क्त प्रत्यय होने पर स्त्रीलिङ्ग में अप्सरायिता ॥११५॥

यदम्बुपूरप्रतिबिम्बितायति-
मरुत्तरङ्गैस्तरलस्तटद्रुमः।
निमज्य मैनाकमहीभृतः सत-
स्ततान पक्षान्धुवतः सपक्षताम् ॥११६॥

अन्वय—यदम्बुपूरप्रतिबिम्बितायतिः मरुत्तरङ्गैः तरलः तटद्रुमः निमज्य सतः पक्षान् धुवतः मैनाकमहीभृतः सपक्षतां ततान।

अनुवाद—जिस (तालाब) के जल-प्रवाह में प्रतिबिम्बित आकार वाला, वायु की तरङ्गों से चञ्चल, तटवर्ती वृक्ष (समुद्र में) डूबकर रहने वाले, पंखों को कंपाते हुए मैनाक पर्वत की समानता कर रहा था।

मल्लि०—यदिति। यस्य तडागस्याम्बुपूरे प्रतिबिम्बितायतिः प्रतिफलितायामः मरुत्तरङ्गैः वातवीजनैस्तरलश्चञ्चलः तटद्रुमः निमज्य सतो वर्तमानस्य पक्षान् धुवतः कम्पयतो मैनाकमहीभृतस्तदाख्यस्य पर्वतस्य सपक्षतां साम्यं ततान, (इत्युपमा)।

टिप्पणी—दैवत-कथा के अनुसार पहले पर्वतों के पंख होते थे। क्रुद्ध होकर इन्द्र ने कुलिश से उनके पंख काट डाले, मैनाक कुल-पर्वतों के साथ क्षीर-सागर में जाकर छिप गया, इसलिये उसके पंख बच गये। यहाँ तालाब में प्रतिबिम्बित वृक्ष को मैनाक के समान बतलाकर तालाब को समुद्र के समान कहा गया है। सपक्षताम्—सजातीयताम्, समान जाति का होना ॥११६॥

पयोधिलक्ष्मीमुषि केलिपल्लवे,
रिरंसुहंसीकलनादसादरम् ।
स तत्र चित्रं विचरन्तमन्तिके,
हिरण्मयं हंसमबोधि नैषधः ॥११७॥

**अन्वय**—स नैषधः पयोधिलक्ष्मीमुषि केलिपल्लवे रिरंसुहंसीकलनादसादरं तत्र अन्तिके विचरन्तं चित्रं हिरण्मयं हंसम् अबोधि ।

**अनुवाद**—उस निषद देश के राजा ने समुद्र की शोभा को चुराने वाले क्रीड़ा-सर में रमण की इच्छा वाली हंसियों के नाद के प्रति साभिलाष, वहाँ समीप में विचरण करता हुआ, अद्भुत सुवर्णमय हंस देखा ।

**मल्लि०**—पयोधीति । अथ स नैषधो निषधानां राजा नलः, ('जनपद-शब्दात् क्षत्रियादञ्' इत्यञ्), पयोधिलक्ष्मीमुषि तत्सदृश इत्यर्थः, अत्र केलि-पल्वले क्रीडासरसि रिरंसूनां रन्तुमिच्छूनां हंसीनां कलनादेषु सादरं सस्पृहं तत्रान्तिके तत्समीपे विचरन्त चित्रमद्भुतं हिरण्मयं सुवर्णमयम्, (दाण्डिनाय-नादिना निपातनात् साधुः) हंसमबोधि ददर्शेत्यर्थः । (दीपजनेत्यादिना कर्त्तरि चिण्) ।

**टिप्पणी**—पयोधिलक्ष्मीमुषि—समुद्र की शोभा को चुराने वाले में, अर्थात् समुद्र के समान शोभा वाले में, संस्कृत-साहित्य में सादृश्य प्रकट करने के लिए प्रायः 'मोषण', 'हरण', 'विडम्बन' आदि शब्दों का प्रयोग किया जाता है । देखिए, 'अचूचुरच्चन्द्रमसोऽभिरामताम्', 'विडम्बयन्तं शितिवाससस्त-नुम्' माघ । अबोधि √बुध्+लुङ् (कर्तृवा०) ॥११७॥

प्रियासु बालासु रतिक्षमासु च,
द्विपत्रितं पल्लवितं च बिभ्रतम् ।
स्मरार्जितं रागमहीरुहाङ्कुरं,
मिषेण चञ्च्वोश्चरणद्वयस्य च ॥११८॥

अन्वय—बालासु रतिक्षमासु च प्रियासु चञ्च्वोः चरणद्वयस्य च मिषेण द्विपत्रितं पल्लवितं च स्मरार्जितं रागमहीरुहाङ्कुरं बिभ्रतं (हंसम् अबोधि)।

अनुवाद—(राजा नल ने) किशोर और युवा अवस्था वाली प्रियाओं के विषय में क्रमशः चञ्चुपुट और चरणयुगल के व्याज से दो पत्र वाले (द्विपत्रित) और पल्लवयुक्त (पल्लवित) कामदेव के द्वारा उत्पादित, अनुराग रूपी वृक्ष के अंकुर को धारण करता हुआ हंस देखा।

मल्लि०—पुनस्तमेव विशिनष्टि—प्रियास्विति। बालासु अरतिक्षमासु किन्त्वासन्नयौवनास्वित्यर्थः अन्यथा रागाङ्कुरासम्भवात्, रतिक्षमासु युवतीषु द्विविधासु प्रियासु विषये क्रमाच्चञ्च्वोस्त्रोट्योः, (चञ्चुस्त्रोटिरुभे-स्त्रियामित्यमरः), चरणद्वयस्य च मिषेण द्विपत्रितं सञ्जातद्विपत्रं पल्लवितं सञ्जातपल्लवञ्च, (चञ्च्वोर्द्वयोः सम्पुटितत्वे साम्यात् द्विपत्रितत्वं चरणयोस्तु विभ्रमरागमत्त्वेन पल्लवसाम्यात्पल्लवत्वं राजहंसानां लोहितचञ्चुचरणत्वात् तस्मिन मिषेणेत्युक्तम्), स्मरार्जितं स्मरेणैव वृक्षरोपणेनोत्पादितमित्यर्थः। राग एव महीरुहस्तस्याङ्कुरं रागमहीरुहाङ्कुरं बिभ्रतम् चञ्चुपुटमिषेण द्विपत्रितं बालिकागोचररागं चरणमिषेण पल्लवितं युवतीविषये रागञ्च बिभ्र-तमित्यर्थः। ईदृशं हंसमबोधीति पूर्वेणान्वयः। ('नाभ्यस्ताच्छतुः' इति नुम्प्रति-षेधः। वृक्षाङ्कुरो हि प्रथमं द्विपत्रितो भवति, पश्चात् पल्लवित इति प्रसिद्धम्। तत्र 'रागं बिभ्रतम्' इति हंसविशेषणात् तद्रागस्य हंसाधिकरणत्वोक्तिः। प्रिया-स्वधिकरणभूतास्वित्युपाध्यायविश्वेश्वरव्याख्यानं प्रत्याख्येयम्, अन्यनिष्ठस्य रागस्यान्याधिकरणत्वायोगात्। नचायमेक एवोभयनिष्ठ इति भ्रमितव्यम्, तस्येच्छापरपर्य्यायस्य तथात्वायोगात्, बुद्ध्यादीनामपि तथात्वापत्तौ सर्वसिद्धान्त-विरोधात्, विषयानुरागाभावप्रसङ्गाच्च। उभयोरपि रागित्वसाम्यादुभयनिष्ठत्व-भ्रमः केषाञ्चित्। तस्मात्कामिनोरन्योन्याधिकरणरागयोरन्योन्यविषय-त्वमेव नाधिकरणत्वमिति सिद्धान्तः। प्रियास्विति विषयसप्तमी न त्वाधार-सप्तमीति सर्वं रमणीयम्। अत्र रागमहीरुहाङ्कुरमिति रूपकं चञ्चचरणमिषे-णेत्यपह्नवानुप्राणितमिति सङ्करः। तेन च बाह्याभ्यन्तररागयोर्भेदेऽपि तदभेदरू-पातिशयोक्त्युत्थापिता चञ्चुचरणव्याजेनान्तरस्यैवबहिरङ्कुरितत्वोत्प्रेक्षा व्यज्यत इत्यलङ्कारेणालङ्कारध्वनिः)।

टिप्पणी—हंस की चोंच और चरण लाल होते हैं, कवि ने चञ्चुपुट और चरणद्वय का 'मिष' शब्द से अपह्नव करके उसमें क्रमशः द्विपत्रित और पल्लवित रागाङ्कुर की उत्प्रेक्षा की है। अङ्कुर निकलते समय पहले दो पत्ते होते हैं जो आपस में जुड़े रहते हैं, बाद में उसमें पल्लव आते हैं। हंस का चञ्चुपुट द्विपत्रित अंकुर के समान प्रतीत होता था, और उसके चरण पल्लवित अङ्कुर के समान। हंस के द्विपत्रित रागाङ्कुर की विषय बाल प्रिया तथा पल्लवित रागाङ्कुर की विषय युवती प्रिया थीं। द्विपत्रितम्—द्विपत्र+इतच्। पल्लवितम्—पल्लव+इतच। बिभ्रतम्—√भृ (बिभर्ति)+शतृ ॥११८॥

महीमहेन्द्रस्तमवेक्ष्य स क्षणं
शकुन्तमेकान्तमनोविनोदिनम् ।
प्रियावियोगाद्विधुरोऽपि निर्भरं
कुतूहलाक्रान्तमना मनागभूत् ॥११९॥

अन्वय—महीमहेन्द्रः स एकान्तमनोविनोदिनं तं शकुन्तं क्षणमवेक्ष्य प्रियावियोगाद् निर्भरं विधुरोऽपि मनाक् कुतूहलाक्रान्तमना अभूत्।

अनुवाद—पृथ्वी का इन्द्र वह (नल) मन को अत्यन्त अनुरञ्जन करने वाले उस पक्षी को क्षणभर देखकर प्रिया के विरह के कारण बहुत व्याकुल होते हुए भी कुछ कौतुकपूर्ण चित्त वाला हो गया।

मल्लि०—महीति। महीमहेन्द्रो भूदेवेन्द्रः स नलः एकान्तं नितान्तं मनो विनोदयतीति तथोक्तं तं शकुन्तं पक्षिणं क्षणमवेक्ष्य प्रियावियोगान्निर्भरमतिमात्रं विधुरो दुःस्थोऽपि मनागीषत्कुतूहलाक्रान्तमनाः कौतुकितचित्तोऽभूत् तं गृहीतुकामोऽभूदित्यर्थः।

टिप्पणी—कुतूहलाक्रान्तमनाः—कुतूहलेन कौतुकेन आक्रान्तं पूर्णं मनः यस्य सः (बहुव्रीहि) ॥११९॥

अवश्यभव्येष्वनवग्रहग्रहा
यया दिशा धावति वेधसः स्पृहा ।

तृणेन वात्येव तयानुगम्यते
जनस्य चित्तेन भृशावशात्मना ॥१२०॥

अन्वय—अवश्यभव्येषु अनवग्रहग्रहा वेधसः स्पृहा यया दिशा धावति, तया भृशावशात्मना जनस्य चित्तेन तृणेन वात्या इव (वेधसः स्पृहा) अनुगम्यते।

अनुवाद—अवश्यम्भावी वस्तुओं के विषय में अप्रतिरुद्ध आग्रह वाली ब्रह्मा की इच्छा जिस ओर दौड़ती है, उसी ओर अत्यन्त परतन्त्र स्वभाव वाला मनुष्य का चित्त, आंधी के पीछे तृणों के समान (ब्रह्मा की इच्छा के) पीछे चलता है।

मल्लि०—कथमीदृशे चापल्ये प्रवृत्तिरस्य धीरोदात्तस्येत्याशङ्क्य नात्र जन्तोः स्वातन्त्र्यं किन्तु भाव्यर्थानुसारिणी विधातुरिच्छैव तथा प्रेरयतीत्याह अवश्येति। अवश्यभव्येष्ववश्यं भाव्यर्थेषु विषये, (भव्यगेयेत्यादिना' कर्त्तरि यत्प्रत्ययान्तो निपातः। ('लुपेदवश्यमः कृत्ये' इत्यवश्यमो मकारलोपः), अनवग्रहग्रहा अप्रतिबन्धनिवन्धा, निरङ्कुशाभिनिवेशेति यावत्, (ग्रहोऽनुग्रह-निर्बन्धग्रहणेषु रणोद्यम इति विश्वः), वेधसः स्पृहा विधातुरिच्छा यया दिशा धावति येनाध्वना प्रवर्त्तते तथैव दिशा भृशावशात्मनात्यन्तपरतन्त्रस्वभावेन जनस्य चित्तेन तृणेन वात्या वातसमूह इव, (पाशादिभ्यो यः), अनुगम्यते। (वेधसः स्पृहा कर्म्म)।

टिप्पणी—धीर प्रकृति होते हुए भी नल क्यों हंस को पकड़ने के लिए चञ्चल हो उठा, इसका समाधान करता हुआ कवि सामान्य सत्य का उद्घाटन करता है—कि ब्रह्मा की इच्छा प्रबल है, उसे कोई रोक नहीं सकता। ब्रह्मा की जैसी इच्छा होती है, मनुष्य परवश होकर वैसे ही कार्य में प्रवत्त हो जाता है। जो नल हंस को पकड़ने के लिये चञ्चल हुआ, वह ब्रह्मा की इच्छा ही थी ॥१२०॥

अथावलम्ब्य क्षणमेकपादिकां
तदा निदद्रावुपपल्वलं खगः।

स तिर्यगावर्जितकन्धरः शिरः
पिधाय पक्षेण रतिक्लमालसः ॥१२१॥

अन्वय—अथ तदा रतिक्लमालसः स खगः एकपादिकाम् अवलम्ब्य तिर्यगावर्जितकन्धरः पक्षेण शिरः पिधाय क्षणम् उपपल्वलं निदद्रौ।

अनुवाद—इसके बाद तब रतिखेद से आलस्ययुक्त वह पक्षी एक पैर के सहारे खड़ा होकर गर्दन तिरछी करके पंख से सिर ढक कर क्षण भर के लिये तालाब के समीप सो गया।

मल्लि०—चिकीर्षितार्थे दैवानुकूल्यं कार्य्यतो दर्शयति—अथेति। अथ नलदृष्टिप्राप्त्यनन्तरं रतिश्रमालसः सः खगो हंसः तदा नलकुतूहलकालक्षणमेकपादो यस्यां क्रियायामित्येकपादिका एकपादेनावस्थानम्, (मत्वर्थीयष्ठन् प्रत्ययः, तद्धितर्थेत्यादिनः सङ्ख्यासमासः, 'यस्येति' च इत्यकार लोपस्य स्थानिवद्भावेन ताद्रूप्याभावान्न पादः पदादेशः), तामेकपादिकामवलम्ब्य तिर्य्यगावर्जितकन्धरः आवर्त्तितग्रीवः सन् पक्षेण शिरः पिधाय उपपल्वलं पल्वलसमीपे निदद्रौ सुष्वाप। स्वभावोक्तिरलङ्कारः। 'स्वभावोक्तिरलङ्कारो यथावद्वस्तुवर्णनम्' इति लक्षणात्।

टिप्पणी—एकपादिकाम्—एक पाद जिस क्रिया में है, ऐसी क्रिया का सहारा लेकर 'एकः पादः यस्यां क्रियायाम्' इस अर्थ में 'तद्धितार्थोत्तरपदसमाहारे च' इस सूत्र के अनुसार संख्यावाचक 'एक' शब्द का 'पाद' के साथ समास होकर 'अत इनिठनौ' मत्वर्थीय ठन् (इक) प्रत्यय होकर एकपादिका शब्द बनता है। उपपल्वलम्—पल्वलस्य समीपे उपपल्वलम् (अव्ययीभावसमास)। पिधाय—अपि+√धा+ल्यप विकल्प से 'अ' लोप होकर 'पिधाय' और 'अपिधाय' दो रूप बनते हैं ॥१२१॥

सनालमात्माननर्निर्जितप्रभं
ह्रिया नतं काञ्चनमम्बुजन्म किम्।
अबुद्ध तं विद्रुमदण्डयण्डितं
स पीतमम्भःप्रभुचामरञ्च किम् ॥१२२॥

अन्वय—स तम् 'आत्माननिर्जितप्रभं ह्रिया नतं सनालं काञ्चनम् अम्बुजन्म किम्, विद्रुमदण्डमण्डितं पीतम् अम्भःप्रभुचामरं च किम्, (इति) अबुद्ध।

अनुवाद—उस (नल) ने उस (हंस) को 'क्या यह मेरे मुख से जीती गई कान्ति वाला, लज्जा से झुका हुआ, नालसहित सुवर्ण का कमल है और क्या (यह) प्रवालों से जटित दण्ड से भूषित (तथा) पीत जल के अधिपति (वरुण) का चामर है" यह समझा।

मल्लि०—सनालमिति। स नलः तं निद्राणं हंसम् आत्माननेन निर्जितप्रभं निजमुखनिराकृतशोभम्, अतएव, ह्रिया नतं सनालं नालसहितं काञ्चनं सौवर्णमम्बुजन्माम्बुजं किम् ? तथा विद्रुमदण्डेन मण्डितं पीतं भूषितं पीतवर्णमम्भःप्रभोरपाम्पत्यः वरुणस्य चामरं किम् ? (इति शब्दोऽत्राध्याहार्य्यः), इति अबुद्ध बुद्धवानुत्प्रेक्षितवानित्यर्थः। (बुध्यतेर्लुङि तङः 'झशस्तथोर्द्धोऽधः' इति तकारस्य धकारः)।

टिप्पणी—क्योंकि वह हँस एक पैर पर खड़ा था, इसलिये नालसहित सुवर्ण कमल-सा प्रतीत होता था, और क्योंकि उसका चरण लाल था, इस लिये विद्रुम-जटित दण्ड से युक्त चामर-सा प्रतीत होता था। अबुद्ध—√बुध् (दिवा०)+लुङ् (कर्तृवा० आत्मनेपद अन्यपु० एकव०)॥१२२॥

कृतावरोहस्य हयादुपानहौ
ततः पदे रेजतुरस्य बिभ्रती।
तयोः प्रवालैर्वनयोस्तथाम्बुजै-
र्नियोद्धुकामे किमु बद्धवर्मणी॥१२३॥

अन्वय—ततः हयात् कृतावरोहस्य अस्य उपानहौ बिभ्रती पदे तयोः वनयोः प्रवालैः तथा अम्बुजैः नियोद्धुकामे बद्धवर्मणी किमु रेजतुः।

अनुवाद—तब घोड़े से उतरे हुए इस (नल) के जूतों को धारण करने वाले चरण उन दोनों वनों के नूतन पल्लवों तथा कमलों से युद्ध करने की इच्छा वाले, मानो, कवच बाँधे हुए जैसे शोभित हो रहे थे।

मल्लि०—कृतेति । ततस्तन्निदर्शनान्तरं हयादश्वात्कृतावरोहस्य कृतावरणस्यास्य नलस्योपानही पादत्राणे, ('पादुका पादूरुपानत् स्त्री, इत्यमरः), [बिभ्रती] पदे चरणे तनोर्वनयो सलिलकाननयोः, (वने सलिलकानने इत्यमरः), प्रवालैः पल्लवैः तथाम्बुजैः पद्मैश्चेत्यर्थः, (सहार्थे तृतीया), नियोद्धुं, कामोऽभिलाषो ययोस्ते नियोद्धुकामे युद्धकामे इत्यर्थः (तुं काममनसोरपीति तुमुनो मकारलोप.) अतो बद्धवर्म्मणी किंतु बद्धकवचे इव ते रेजतुः, । किमित्युत्प्रेक्षा ।

टिप्पणी—पदे (नपु०द्विव०) चरणौ, पैर, 'रेजतुः' क्रिया का कर्त्ता । वनयोः—वन श्लिष्ट शब्द है, इसके दो अर्थ हैं—(१) कानन (२) जल; कानन के पल्लवों और जल के कमलों से युद्ध की इच्छा से नल के चरणों ने, मानो, जूतों के रूप में कवच बाँध रक्खे थे । रेजतुः—√राज्+ लिट् (द्विव० अन्यपु०) नियोद्धुकामे—नि+युध्+तुमुन्+काम; काम और मनस् परे रहने पर 'तुमुन्' प्रत्यय के मकार का लोप हो जाता है ॥१२३॥

विधाय मूर्तिं कपटेन वामनीं
स्वयं बलिध्वंसिविडम्बिनीमयम् ।
उपेतपार्श्वश्चरणेन मौनिना
नृपः पतङ्गं समधत्त पाणिना ॥१२४॥

अन्वय—अयं नृपः स्वयं कपटेन वामनीं बलिध्वंसिविडम्बिनीं मूर्तिं विधाय मौनिना चरणेन उपेतपार्श्वः पाणिना पतङ्गं समधत्त ।

अनुवाद—इस राजा (नल) ने स्वयं कपट से छोटी, बलि को हराने वाले वामन का अनुकरण करने वाली मूर्ति बनाकर निःशब्द चरण से समीप जाकर हाथ में पक्षी पकड़ लिया ।

मल्लि०—विधायेति । अयं नृपः स्वयमेव कपटेन छद्मना वामनीं ह्रस्वाम्, (गौरादित्वात् ङीप), बलिध्वंसिविडम्बिनीम्, कपटवामनविष्णुमूर्त्यनुकारिणीमित्यर्थः, मूर्तिं विधाय, कायं सङ्कोच्येत्यर्थः, मौनिना निःशब्देन चरणेनोपेतपार्श्वः प्राप्तहंसान्तिकः पाणिना पतङ्गं पक्षिणं समधत्त संघृतवान्, जग्राहेत्यर्थः । (स्वभावोक्तिरलङ्कारः) ।

**टिप्पणी**—वामनीम् (विशेषण)—ह्रस्व, बौनी। बलिध्वंसिविडम्बिनीम् (विशेषण)—बलिध्वंसिनं विडम्बयतीति ताम्, अर्थात् पाताल के राजा बलि का दर्पनाश करने वाले वामनावतार विष्णु की मूर्ति का अनुकरण करने वाली। दैवत-कथा के अनुसार विष्णु ने तीन चरणों में तीनों लोकों को नाप दिया था और पाताल के राजा बलि को, जिसे अपनी दानशूरता का बड़ा अभिमान था, वचन पूरा न कर सकने के कारण बाँध कर डाल दिया था। राजा नल ने भी झुककर अपने शरीर को छोटा कर लिया और दबे पाँव से हंस के पास पहुँच कर उसे हाथ में पकड़ लिया। समधत्त+सम्+धा+लङ् (आत्मने० अन्यपु० एकव०) ॥१२४॥

> तदात्तमात्मानमवेत्य संभ्रमात्
> पुनः पुनः प्रायसदुत्प्लवाय सः।
> गतो विरुत्योड्डयने निराशतां
> करौ निरोद्धुर्दशति स्म केवलम् ॥१२५॥

**अन्वय**—सः आत्मानं तदात्तमवेत्य संभ्रमात् उत्प्लवाय पुनः पुनः प्रायसत्। उड्डयने निराशतां गतः विरुत्य निरोद्धुः करौ केवलं दशति स्म।

**अनुवाद**—उस (हंस) ने अपने को उस (नल) के द्वारा पकड़ा हुआ जानकर घबराहट के साथ उड़ने का बार बार प्रयत्न किया। (लेकिन) उड़ने के विषय में निराश हुआ (वह) रोकर पकड़ने वाले के दोनों हाथों को ही काट रहा था।

**मल्लि**—तदिति। सः हंस आत्मानं तदा तु तेन नलेनात्तं गृहीतमवेत्य ज्ञात्वा सम्भ्रमादुत्प्लवायोत्पतनाय पुनः पुनः प्रायसदायस्तवान् (यसु प्रयत्न इति धातोर्लुङि पुषादित्वाच्च्लेरङादेश), उड्डयने उत्पतने निराशतां गतो विरुत्य विक्रुश्य निरोद्धुः गहीतुः करौ केवलं करावेव दशति स्म दृष्टवान्। (अत्रापि स्वभावोक्तिरेव)।

**टिप्पणी**—आत्तम्—आ+√दा+क्त, स्वरान्त उपसर्ग से परे 'दा' धातु

को 'त' हो जाता है। प्रायसत्—प्र+√ यस्+लुङ् (अन्यपुरुष एकवचन), पुषादि धातुओं में होने के कारण च्लि को अङादेश होगा, न कि सिच् (स्), जैसा कि साधारणतया लुङ्लकार में होता है। निरोद्धुः—नि+√रुध्+तृच्, षष्ठी एकवचन।

ससंभ्रमोत्पातिपतत्कुलाकुलं
सरः प्रपद्योत्कतयाऽनुकम्पिताम्।
तमूर्मिलोलैः पतगग्रहान्नृपं
न्यवारयद्वारिरुहैः करैरिव ॥१२६॥

अन्वय—ससंभ्रमोत्पातिपतत्कुलाकुलं सरः उत्कतया अनुकम्पितां प्रपद्य ऊर्मिलोलैः वारिरुहैः करैः तं नृपं पतगग्रहात् न्यवारयद् इव।

अनुवाद—घबराकर उड़ने वाले पक्षियों के समूह से भरा हुआ (वह) तालाब विषाद के कारण दयाभाव को प्राप्त करके तरङ्गों से चञ्चल कमल-रूपी करों से उस राजा को पक्षी के पकड़ने से, मानो रोक रहा था।

मल्लि०—स इति। ससम्भ्रमं सत्वरमुत्पातिना उड्डीयमानेन पतत्कुलेन पक्षिसङ्घेनाकुलं सङ्कुलं सरः कर्तृ उत्कतया उन्मनस्तया, (उत्क उन्मना इति निपातनादभिधानाच्च साधुः), अनुकम्पितां प्रपद्य कृपालुतां प्राप्य तं नृपमूर्मिलोलैश्चलैर्वारिरुहैः करैः, (इति व्यस्तरूपकम्), पतगग्रहात्पक्षिग्रहात् न्यवारयदिवेत्युत्प्रेक्षा। (वास्तवनिवारणासम्भवादुत्प्रेक्षा, निवारणस्य कर-साध्यत्वात् तत्र रूपकाश्रयणम्। अत एवेवशब्दस्य उपमावाचेनार्थानुसाराद्व्यव-हितान्वयेनाप्युत्प्रेक्षाव्यञ्जकत्वमिति रूपकोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

टिप्पणी—जैसे कोई दयालु पुरुष अपने सामने किसी को मारते देखकर मारने वाले को रोकता है, वैसे ही तालाब भी, मानो, कमलों के रूप में हाथ हिला-हिलाकर राजा को पक्षी के पकड़ने से मना कर रहा था। यहाँ कमल में कर का आरोप किया गया है और जड़ तालाब वस्तुतः निवारण नहीं कर सकता है इसलिये उसमें निवारण किया की उत्प्रेक्षा की गई है ॥१२६॥

